# केशवी पद्यात्मिका शिक्षा

अनुदात्तादुदात्तश्चेत्स्वरितोत्तर एव च
हृच्छिरःकर्णमूलेषु न्यसेद्धस्तमसंशयम् १

अनुदात्तादुदात्तश्चेदनुदात्तपरस्तथा
अनुदात्तं हृदि न्यस्योदात्तं वामभ्रुवि न्यसेत् २

पुनर्हृदि न्यसेन्नोचमिति शास्त्रव्यवस्थितिः
प्रचितोच्चारणे न्यासो हस्तस्य नासिकाग्रतः ३

जात्योऽभिनिहितः क्षैप्रः प्रश्लिष्टो व्यञ्जनस्तिरः
तैरोविरामः पादवृत्तस्ताथाभाव्यस्तथाष्टमः ४

एतेषां लक्षणान्याहुः कात्यायनमुनीश्वराः
तत्र जात्यादिसञ्ज्ञानां चतुर्णां दर्शने करम् ५

तिर्य्यञ्चङ्गमयेद्धीमान्पितृदानवदेव हि
मनुष्यदानमिव चेदुदात्तः प्रत्ययः स्वरः ६

आद्यान्तस्थस्य जोच्चारः पदादौ पठितस्य च
उपसर्गपरो यस्तु यस्य छन्दसि नेष्यते ७

पदस्याद्यन्तमध्ये स्याद्रहैः सँय्युतस्य च
द्विर्भावेऽप्येवमेव स्यादिति कात्यायनश्रुतिः ८

अन्तस्थानां द्वितीयस्य सैकारोच्चारणं भवेत्
अत्युक्तहल्भिः शषसैर्ऋकारेण युतस्य च ९

एवमेव तृतीयस्य शषसैः सँय्युतस्य च
सैकारोच्चारणं कुर्यादिति शास्त्रव्यवस्थितिः १०

ऋकारस्य च सँय्युक्तासँयुक्तस्यापि सर्वतः
सैकारोच्चारणं कुर्याल्लकारस्य तथा भवेत् ११

अथ चान्तस्यान्तस्त्रिविधं गुरुमध्यमलघुवृत्त्योच्चारः

वाक्यस्यादिममध्यान्त्यस्य प्रादिकपरस्य लघ्वेव स्यात् १२

वो वां वा वै मन्त्रे लघवो गुरवः पदे च विज्ञेयाः
देवो वः सवितादौ मृग्यमुदाहरणमन्येषाम् १३

असंय्युक्तस्य मूर्द्धन्योष्मणः खोच्चारणं मतम्
दुमृते संय्युक्तस्यापि सस्य योग ष एव हि १४

छन्दसीत्येव खोच्चारो लोक प्रकृतिरिष्यते
अनुस्वारस्य अंकार आदेशश्छन्दसि स्मृतः १५

ऊष्मरेफेषु परतस्तस्य त्रैवध्यमुच्यते
ह्रस्वाद्दीर्घाद्दीर्घह्रस्वो गुरौ च परतो गुरुः १६

ऋकारपर ऊष्मान्त्ये दीर्घाद्दीर्घोऽपि जायते
परसवर्णो ह्यनुस्वारस्येषत्प्रकृतिरुच्यते १७

अणुमात्रमनुस्वारो ह्युत्तमं चाणुमात्रकम्
शषसे च कखपफे विसर्गाः सन्ति यत्र च १८

वाचो विरामः कर्त्तव्यस्तत्रेषच्छ्रुतिचोदनात्
सँय्युक्तस्य पदाद्यस्य चाकारस्य प्रतीयते १९

ईषद्दीर्घतयोच्चारः कात्यायनमुनेर्गिरा
आस्तिकस्य मुनेर्वंशे जातो दैवज्ञगोकुलः २०

तत्सुतेन केशवेन कृता सम्यक् शुभाप्तिनाम्
प्रीत्यर्थं सुधियां कारिकावली निर्म्मला शुभा २१

इति श्रिमदास्तिकमहर्षिवंशोद्भवज्ञगोकुलचन्द्रसुतदैवज्ञकेशवरामकृता-
कारिकावली सम्पूर्णा